# संस्कृतनिपुणता
# Level-02

Janaseva Trust Premises, Magadi Main Road,
Channenahalli, Bengaluru- 562130
Ph- +91 8431668084 , info@vvss.res.in www.vvss.res.in

## श्लोकानाम् अवगमनक्रमः

1. पदच्छेदः
2. अन्वयः (आकाङ्क्षापद्धतिः)
3. अन्वयार्थः
4. पदपरिचयः
5. व्याकरणविशेषः

## तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् |
## नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् || १-१-१

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

  तपस्वी वाल्मीकिः तपःस्वाध्यायनिरतं वाग्विदां वरं मुनिपुङ्गवं नारदं परिपप्रच्छ ।
- अन्वयार्थः

  तपस्वी वाल्मीकिः तपसि अध्ययने च सर्वदा प्रवृत्तं शास्त्रज्ञेषु मुनिषु च श्रेष्ठं नारदं पृष्टवान् ।

# तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् |
# नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् || 1-1-1

- पदपरिचयः
  - तपःस्वाध्यायनिरतम् – तपःस्वाध्यायनिरत, पुं, द्वितीया, एकवचनम्
  - तपस्वी – तपस्विन्, पुं, द्वितीया, एकवचनम्
  - वाग्विदाम् – वाग्विद्, पुं, षष्ठी, बहुवचनम्
  - वरम् – वर, पुं, द्वितीया, एकवचनम्
  - नारदम् – नारद, पुं, द्वितीया, एकवचनम्
  - परिपप्रच्छ – परि+प्रच्छ्+लिट्, प्रथमपुरुषः, एकवचनम्
  - वाल्मीकिः – वाल्मीकि, प्रथमा, एकवचनम्
  - मुनिपुङ्गवम् – पुनिपुङ्गव, द्वितीया, द्विवचनम्

# तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् |
# नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् || 1-1-1

- व्याकरणविशेषः
  - तपःस्वाध्यायनिरतम् – तपः च स्वाध्यायः च – तपःस्वाध्यायौ। (द्वन्द्वः) तपःस्वाध्याययोः निरतः – तपःस्वाध्यायनिरतः। (स.तत्पुरुषः) तम्।
  - तपस्वी – तपः अस्य अस्ति इति। तपस्+विन्।
  - वाग्विदाम् – वाचं वेत्ति इति। उपपदसमासः। क्विप्।
  - वरम् –
  - नारदम् –
  - परिपप्रच्छ – परि+प्रच्छ्+लिट्,
  - वाल्मीकिः – वल्मीके भवः। वल्मीक+इञ्
  - मुनिपुङ्गवम् – पुमान् च असौ गौः च – पुङ्गवः। (कर्मधारयः), मुनिषु पुङ्गवः।

# समासः

समासः – अनेकस्य पदस्य एकपदीकरणम्। तपःस्वाध्यायनिरतम्।

विग्रहः - येन वाक्येन समस्तस्य पदस्य अर्थः अवगम्यते तद्वाक्यम्।
तपः च स्वाध्यायः च तपःस्वाध्यायौ। (द्वन्द्वः)
तपःस्वाध्याययोः निरतः – तपःस्वाध्यायनिरतः। (स.तत्पुरुषः)

# समासः

1. समासः सुबन्तानां भवति न तिङन्तानाम् । सीतापतिः, तपःस्वाध्यायनिरतम् ।

2. समासः द्वयोः द्वयोः पदयोः भवति । द्वन्द्वे तु युगपत् बहूनामपि भवति ।

   तपः च स्वाध्यायः च तपःस्वाध्यायौ । (द्वन्द्वः)

   तपःस्वाध्याययोः निरतः – तपःस्वाध्यायनिरतः । (स.तत्पुरुषः)

3. परस्परान्वितयोः सुबन्तयोः समासः भवति ।

   ‘इयं लेखनी सीतायाः, पतिः रमायाः गच्छति’

# समासः

4. समासे पूर्वत्र श्रूयमाणं पदं पूर्वपदम् इति, उत्तरत्र श्रूयमाणं पदम् उत्तरपदम् इति च कथ्यते। सीतापतिः।
5. समासे कृते विभक्तेः लोपः भवति। सीतायाः पतिः – सीतापतिः।

# समासः

- समासः
  - केवलः
  - विशेषः
    - अव्ययीभावः
    - तत्पुरुषः
    - बहुव्रीहिः
    - द्वन्द्वः

# समासः

## तत्पुरुषः

- प्रायः उत्तरपदार्थप्रधानः । उत्तरपदस्य अर्थः यदि क्रियया अन्वितः भवति तर्हि तत्पुरुषः ।
    - सीतापतिः गच्छति ।
- प्रायः उत्तरपदस्य लिङ्गमेव समस्तपदस्यापि लिङ्गम् ।
    - आम्रवृक्षे बहूनि फलानि सन्ति ।
    - कर्मकुशलम् आह्वयतु ।
    - मद्भक्तः भव इति श्रीकृष्णः अर्जुनम् अवदत् ।

# समासः

## द्वन्द्वः

- प्रायः उभयपदार्थप्रधानः ।
    - रामकृष्णौ गृहं प्रविशतः
- प्रायः उत्तरपदस्य लिङ्गं समस्तपदस्य, समासघटकपदार्थस्य संख्यामवलम्ब्य वचनं च ।
    - हरिहररवयः शालायां पठन्ति ।
    - ज्ञानी सुखदुःखे समानतया पश्यति ।
    - बालकः पाणिपादं प्रक्षालयति ।
    - रागद्वेषौ परिहरणीयौ ।

# समासः

## बहुव्रीहिः

- प्रायः अन्यपदार्थप्रधानः। अन्यत् पदम् = समासाघटकं पदम्।
    - पीतक्षीरः बालः गच्छति।
- प्रायः विशेष्यस्य (अन्यपदार्थस्य) लिङ्गमेव समस्तपदस्यापि लिङ्गम्।
    - पीतक्षीरा बालिका
    - पीतक्षीरं मित्रम्
    - राजेशस्य गृहे बहुफलः फनसवृक्षः वर्तते।

# समासः

अव्ययीभावः

- प्रायः पूर्वपदार्थप्रधानः ।
    - उपवृक्षं यानम् अस्ति ।
- अव्ययं भवति । नपुंसकलिङ्गतां च प्राप्नोति ।
    - आसमुद्रं भारतदेशः वर्तते ।
    - युवतिः अनुरूपं वस्त्रं क्रीणाति ।

# तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् |
# नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् || 1-1-1

- व्याकरणविशेषः
  - तपःस्वाध्यायनिरतम् – तपः च स्वाध्यायः च – तपःस्वाध्यायौ । (द्वन्द्वः) तपःस्वाध्याययोः निरतः – तपःस्वाध्यायनिरतः । (स.तत्पुरुषः) तम् ।
  - तपस्वी – तपः अस्य अस्ति इति । तपस्+विन् ।
  - वाग्विदाम् – वाचं वेत्ति इति । उपपदसमासः । क्विप् ।
  - वरम् –
  - नारदम् –
  - परिपप्रच्छ – परि+प्रच्छ्+लिट्,
  - वाल्मीकिः – वल्मीके भवः । वल्मीक+इञ्
  - मुनिपुङ्गवम् – पुमान् च असौ गौः च – पुङ्गवः । (कर्मधारयः), मुनिषु पुङ्गवः ।

# सप्तविधप्रत्ययाः

1. सनादिप्रत्ययाः - 12
2. विकरणप्रत्ययाः- 20
3. कृत्प्रत्ययाः - 124
4. तिङ्प्रत्ययाः - 18
5. सुप्प्रत्ययाः - 21
6. स्त्रीप्रत्ययाः - 10
7. तद्धितप्रत्ययाः - 275

संहतिः - 480

# सनादयः प्रत्ययाः

- सनादयः द्वादश वर्तन्ते।
- सनादिप्रत्ययान्ताः → धातवः
- सनादिप्रत्ययान्ताः → आतिदेशिकधातवः

सनादिप्रत्ययाः

- सन्
- क्यच्
- काम्यच्
- क्यङ्
- क्यष्
- क्विप्
- णिच्
- यङ्
- यक्
- आय
- ईयङ्
- णिङ्

(सनाद्यन्ताः धातवः ३/१/३२)

# उदाहरणम्

‘बालकः गणितं जिज्ञासते’ (ज्ञातुम् इच्छति)
जिज्ञास
आतिदेशिकधातुः
औपदेशिकधातुः
ज्ञा+स

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies
धियो विश्वा विराजति।

# तिङ्प्रत्ययाः

- तिङ्प्रत्ययाः १८ वर्तन्ते।
- ते च – तिप्, तस्, झि, सिप्, थस्, थ, मिप्, वस्, मस्, त, आताम्, झ, थास्, आथाम्, ध्वम्, इट्, वहि, महिङ्
- तिङ्प्रत्ययाः धातुभ्यः भवन्ति।

# तिङ्प्रत्ययाः

द्विविधाः

- परस्मैपदानि
- आत्मनेपदानि

# तिङ्प्रत्ययाः

| परस्मैपदानि | | | | आत्मनेपदानि | | |
|---|---|---|---|---|---|---|
| | एकवचनम् | द्विवचनम् | बहुवचनम् | एकवचनम् | द्विवचनम् | बहुवचनम् |
| प्रथमपुरुषः | तिप् | तस् | झि | त | आताम् | झ |
| मध्यमपुरुषः | सिप् | थस् | थ | थास् | आथाम् | ध्वम् |
| उत्तमपुरुषः | मिप् | वस् | मस् | इट् | वहि | महिङ् |

- द्वित्वं बोधयितुं द्विवचनप्रत्ययः । बालकौ पठतः।

- बहुत्वं बोधयितुं बहुवचनप्रत्ययः । बालकाः पठन्ति।

- अन्यत्र एकवचनप्रत्ययः। बालकः पठति।

# परस्मैपदिनः-आत्मनेपदिनः-उभयपदिनः

- येभ्यः धातुभ्यः परस्मैपदप्रत्ययः केवलं भवति ते **परस्मैपदिनः**। तद्यथा भू → भवति।
- येभ्यः आत्मनेपदप्रत्ययः केवलं ते **आत्मनेपदिनः**। तद्यथा एध → एधते।
- येभ्यः उभयविधप्रत्ययाः अपि भवन्ति ते धातवः **उभयपदिनः**। तद्यथा चि→ चिनोति/चिनुते।

# विकरणप्रत्ययाः

- प्रायः धातोः तिङ्प्रत्यये परे ये प्रत्ययाः विधीयन्ते ते विकरणप्रत्ययाः।

पठ्

पठ् + ति

पठ्+ शप् + ति

# विकरणप्रत्यया:

विकरणप्रत्यया: २० वर्तन्ते। ते च –

१) शप् २) श्यन् ३) श्नु ४) श ५) श्नम् ६) उ ७) श्ना ८) स्य ९) तास् १०) सिप्

११) आम् १२) च्लि १३) सिच् १४) क्स १५) चङ् १६) अङ् १७) चिण् १८) यक् १९) शानच् २०) शायच्